Dr. V. Raghavan, M.A., Ph.d ,
Professor of Sanskrit (Retd.)
7, Srikrishnapuram Street.
Royapettah, Madras-600014.
Tel: 85191.

# NOTE TO READERS.

Here the words are arranged in alphabetical order and are divided into two kinds:- simple (vyasta pada) and compound (Samastha pada). The numbers given in front of the words refer to the Sargas and Slokas in which they occur. The numbers which are within the brackets and printed in antique types denote the Sargas; and those without the brackets refer to the Slokas in which they occur. For example Yaksha (1) 1 means the word Yaksha occurs in the first Sloka of the first Sarga.

Compound words are denoted by the plus + sign. If the sign is to the left of a word, it is the second word in the compound. If the sign is to the right of the word, it is the first word; and if the signs are on both sides, it is the middle word of the compound. For example "janakathanaya" (1) 1+ means that this word occurs in the first Sloka of the first Sarga and is the first word of the compound 'janaka thanaya snana punyodhakeshu' The word 'punya' has + sign on both sides of it, which inidcates that it is the middle word in the compound and 'udak a' has a +sign before it, which shows that it is the last word in the compound. It is hoped that this new procedure will be found very simple and easy of understanding.

The two other works on 'Raghuvamsa' and 'Kumarasambhava, are now under print and will be published shortly .

# FOREWORD

This is an alphabetical list of the words found in the *Megha-sandesa* of Kalidasa; and, although it does not cite the actual passages in which the several words occur, it gives complete references to the places in the poem where they do. The Swamiji, who has compiled it, is now engaged in preparing similar lists for the remaining poems and plays of the same poet.

A concordance of this kind may serve several useful purposes. Its utility to the lexicographer, for instance, who is intent on giving illustrative quotations from standard authors is obvious. In the case of a work like the Rigveda containing obscure terms, it helps to determine their meanings through a comparison of their uses in different contexts. Its main use here will be in the study of the poet's style on its formal side. By glancing over this list, we can see the supreme simplicity of his vocabulary. There is nothing that is archaic or abstruse in it; and it is also singularly free from out-of-the-way derivatives and ponderous compounds, which may easily disfigure the composition of a poet writing in a learned language like Sanskrit. It shows, by the way, that the highest form of poetry can be fashioned out of the simplest words. The range of the vocabulary again is surprisingly wide, considering the short compass of the poem. To mention only one other striking feature: very few words and phrases are used in the work more than twice, and several appear

only once. In the *Rtu-samhara*, for example, (assuming that it is by Kalidasa) recurrent expressions which serve no special poetic purpose are not at all uncommon; and one may safely conclude on the ground merely of this feature of the style that the present work is later, even though there were no other indications of it. When similar concordances relating to the remaining works of the poet which are all much longer are published, they are sure to disclose other characteristic excellences of his style and also throw further light on the course of its development. Meanwhile those who are devoted to the muse of Kalidasa will feel grateful to the Swamiji for this new aid to the study and appreciation of a poem which may, without any exaggeration, be described as one of the greatest and finest lyrics in the language.

Mysore,
30th October 1938

**M. HIRIYANNA, M. A.**
Professor of Sanskrit.

Age, I think, has no effect on the born literateur. Despite its infirmities, yearnings and frustrations, the mind dwells ever in the realm to which it is attuned.

H. H. Sri Yatirāja Swamy of Melkote may be 80, but his eagerness to conquer new fields of scholarship is unimpaired. During the last few years he has placed before the world such a wide range of works as "Tāpasa Vathsarāja," "Sringāra Prakāsa," "Kāsyapa Samhita," "Pādma Samhita," and "Poushkara Samhita." And now he is surprising us with a laborious and detailed index and glossary to each one of Kālidāsā's works.

What is it for, one may ask. The question would not arise if one saw how many works had been published on Shakespeare's Vocabulary.

Kālidāsā is the most famous and most beloved of Asia's poets. Indian literary criticism has stagnated where Sāyana and Mallinatha left it. Original scholarship has lived a parched and half starved life during the last few centuries. Therefore we should welcome any new effort to throw fresh light on the old Masters or to enable us to view them from a fresh angle.

The work is a tribute which H. H. Sri Yatirāja Swamy has rendered to the great poet of the past,— the great poet of all time, to be more correct,—a tribute in which we should all be proud to join in whatever way we can. The elaborate and painstaking effort involved therein is considerable, and that so old and hoary a personage as Sri Swamy should have accomplished it, shoud serve as an inspiration to younger men. I hope the work will be welcomed by all lovers of learning.

MYSORE,
26—6—39

G. R. JOSYER, M.A.,(HONS),
F.R.E.S., M.R.S.L.

श्रीः

# प्रस्तावना

काव्येषु कालिदासस्य चतुर्षु चतुरोक्तिषु ।
प्रयुक्तानां त्रिधा भिन्ना पदानां प्राक्कृताऽवलिः ॥

क्षुद्रया साऽन्तरायाप्त्या निद्रयेव व्यलीयत ।
भद्रया साद्यसम्पत्या मुद्रयाऽद्य प्रकाश्यते ॥

अपोद्धृत्य चतुर्भ्योऽत्र दर्शितेयं पदावलिः ।
काव्ययोर्मेघसन्देश-कुन्तलेश्वरदौत्ययोः ॥

नामाक्षरनिपातोपसर्गभेदाच्चतुर्विधम् ।
पदमाद्यत्रयं काव्ये योज्यते नान्तिमं स्वतः ॥

असमस्तसमस्तत्वभेदात् द्वेधा निगद्यते ।
पदं तु नामसंज्ञेषु नान्त्ययोरुभयोस्तथा ॥

व्यस्तानां तु प्रयुक्तानां पदानां तत्तदाकरे ।
सर्गपद्याङ्कनिर्देशौ यथाविधि निदर्शितः ॥

समस्तं तत्पृथक्कृत्य पूर्वापरसमासतः ।
हंसपादाङ्कचिह्नेन तत्तद्योगः प्रकाशितः ॥

सर्गसङ्ख्या तु सर्वत्र नियमात्कुण्डलीकृता ।
पद्याङ्कस्तामनुस्यूतो रेखान्यस्तोऽस्त्यनावृतः ॥

उदाहरणमाला च सुखवित्त्यै प्रदर्श्यते ।
परिभाषाप्रभेदश्च प्रस्तुते परिकल्पितः ॥

यथा—असमस्तपदानां न्यासः—

| | |
|---|---|
| यक्षः (१) १ | कृत्वा (१) ५०. |
| गम्भीरा (१) ४१ | कच्चित् (२) २२, ५२. |
| चक्रे (१) १ | उपकर्तुं (२) ३८. |
| जानीथाः (२) ५० | अनुखनकलं (१) ५१. |
| अस्ति (२) ४३ | एकान्ततः (२) ४५. |

समासात् पृथक्कृतानां न्यासो यथा—

| | | | |
|---|---|---|---|
| जनकतनया | (१) १+ | उत्सुक | (२)+३६ |
| पुण्य | (१)+१+ | उपचित | (२) ५०+ |
| उदक | (१)+१ | दान | (२)+२७+ |

मिश्राणां न्यासो यथा—

अम्भः (१) २२+, ५२.

उत्सङ्ग (२) २३,+३०.

अत्रापरमेकं परिभाषारहस्यं—यथा वर्णक्रमेण समस्तपदानाम् आदौ, अग्रे उभयतः हंसपादन्यासः कृतः । स तु तत्तत्प्रदेशे पदान्तरसमासं ज्ञापयति यद्यपि, तथाऽपि अकारादि वर्णक्रमेण निवेशितानां पदानां पार्श्वयोः हंसपदन्यासे परिपाटी विकृता सम्पद्यते. झटिति पदाद्याक्षरग्रहणे सम्भवतोः विलम्बस्य वारणाय उपात्तं पदं यस्मिन् पद्ये वर्तते तस्य पद्यस्य सङ्ख्याङ्कस्य पार्श्वे तत् हंसपादचिह्नं निवेशितम्—इति.

समासात्पृथगात्तानां पदानां न्यासपर्वणि ।
वीक्ष्यतां हंसपादाङ्कन्यासस्यादर्शितः क्रमः ॥

रभसात्कृतमुद्रणे विवेक-
स्खलितान्यत्र बहूनि सम्भवेयुः ।
परिशोध्य परिष्कृतिं स्वकीया-
मपि निश्चित्य विपश्चितो गृणन्तु ॥

रघुवंश कुमारसम्भवोप-
स्तवने साभिजनां प्रचक्ष्महे ताम् ।
कृपया परिशुद्धये कृतेर्वा
यदि वा नः प्रणयाय बोधयन्तु ॥

इह काव्यचतुष्टयेतिवृत्ते
सुचिराद्रूहितमस्ति वस्तु शस्तम् ।
तदवेक्ष्य च विस्तृणीमहीतो
रघुवंशस्थपदालिभूमिकायाम् ॥

श्रीः

# मेघसन्देश काव्यपदावलिः

## स्वराद्यक्षरपदानि

---

### अकारादिपदानि.

| पद | स्थान |
|---|---|
| अक्षय्य | (२) ८+, |
| अक्षय्यान्तर्भवननिधिः | (२) ८ |
| अङ्क | (२) +२३ |
| अङ्कित | (१) १२, ३२+, |
| अङ्ग | (१) १९, ३२+, (२) ३९, ४१, ४५, |
| अङ्गना | (१) १०, +२८ (२) २४ |
| अङ्गानुकूल | (१) ३२ |
| अग्र | (१) १५,+३६,+६१ + (२) +१,+६ |
| अग्रयायिन् | (१) ६१, |
| अगार | (२) १२ |
| अग्निः | (१) +५३ |
| अचलः | (१) १८, ५३ |
| अचेतन | (१) १५ |
| अच्छः | (१) ५२+ |
| अच्छस्फटिकविशद | (१) ५२ |
| अजिन | (१) +३७+ |
| अञ्जन | (१)+६०+(२)३२+ |
| अञ्जनस्नेहशून्यं | (२) ३२ |
| अट्टहासः | (१) ५९ |
| अत्यादित्य | (१) ४४ |
| अतिक्रान्त | (२) ४० |
| अतिथिः | (१) ५९ |
| अतीत | (१) ३० |
| अद्रि | (१) २, १४, +४५ +, ५८, ६० |
| अद्रिग्रहणगुरु | (१) ४५ |
| अदृष्ट | (२) ४० |
| अधम | (१) ६ |
| अधर | (२) +१९+, +२१ +, २८+ |
| अधरकिसलयक्लेशिन् | (२) २८ |
| अध्वन् | (१) १७+, ३३+, ३९+,+४६,५३+, ५५+ |

| | |
|---|---|
| नियत | (१) ४४+ |
| नियतवसति | (१) ४४ |
| नियमन | (१) +५८+ |
| निरत | (१) +३४+ |
| निर्दय | (२) ४४+ |
| निर्दयाश्लेषहेतु | (२) ४४ |
| निर्दिशन् | (१) २२ |
| निर्विनोद | (२) २५ |
| निर्विन्ध्या | (१) २९ |
| निर्ह्रादः | (१) ५७ |
| निवृत्त | (२) ५१ |
| निश्शब्द | (२) ५२ |
| निश्वास | (२) २८ |
| निशीथ | (२) ७, २७ |
| निषण्ण | (१) ५३, (२) १८ |
| निष्फल | (१) ५५+ |
| निष्फलारंभयत्न | (१) ५५ |
| निष्यन्द | (१) +४३+ |
| निहित | (२) +१७, +२४+, ३०, +३६ |
| नीचैराख्य | (१) २६ |
| नीड | (१) २४+ |
| नीडारंभ | (१) २४ |
| नीत | (२) २, ६ |
| नीपं | (१) २१ |
| नीलं | (१) ४२ |
| नीलकण्ठः | (२) १६ |
| नीवी | (२) ५+ |
| नीवीबन्धोच्छ्वसित | |
| [1]सुभग | (२) ५ |
| नृत्त | (१) +३३+ |
| नृत्तारंभ | (१) ३७ |
| नेता | (२) ७ |
| नेत्रं | (१) +४८+ (२) +२१ |
| नेमि | (२) +४७+ |
| नेय | (१) ४० |
| नैशं | (२) ९ |
| न्यस्त | (१) +६० |
| न्यास | (१) +३६+, +५६ (२) +११+ |

**प**

| | |
|---|---|
| पक्व | (२) १९+ |
| पक्वबिंबाधरोष्ठी | (२) १९ |
| पक्ष्म | (२) ४८+ (२) २७ |
| पक्ष्मोत्क्षेप | (१) ४८ |
| पङ्क | (१) +५३+ |
| पङ्क्ति | (१) +५१ |
| पञ्चबाणः | (२) ४२ |
| पञ्जरस्थ | (२) २२ |
| पट | (१) +६३+ |
| पटहता | (१) ३५ |
| पटु | (१) ५+, ३२ |
| पटुकरण | (१) ५ |

१. शिथिल. पाठान्तरम.

१. परिमितकथा—पाठान्तरम्.

---

१. पुत्रप्रेमा—पाठान्तरम्.

१. इदं निपातितम्?

| | |
|---|---|
| भवनशिखिन् | (१) ३३ |
| भवित्री | (१) ६० |
| भवान् | (१) ९, ११, १२, २३, २८, ३९, ४४, ५२, ५५ (२) ५२ |
| भवानी | (१) ३७, ४५ |
| भाः | (२) +१८ |
| भानुः | (१) ३५, ४० |
| भारः | (१) +५४ (२) +१९, ४१ |
| भावः | (१) +४७ (२) २२+, +३१ |
| भावगम्यं | (२) २२ |
| भाविन् | (१) ४२, ५७ |
| भिन्न | (१) +२४+, +६०+ (२) २१+ |
| भिन्नवर्णाधरोष्ठ | (२) २१ |
| भुक्त | (१) +१९+ |
| भुज | (१)+३७+, +५०+ (२) +७+, +३४+ +४४ |
| भुजग | (१) ६१+ (२) ४८+ |
| भुजगवलय | (१) ६१ |
| भुजगशयन | (२) ४८ |
| भुजतरुवन | (१) ३७ |
| भुवन | (१) ६+ |
| भुवनविदित | (१) ६ |
| भूः | (१) १८, ४६, ४७ (२) +१, २४ |
| भूति | (१) १९ |
| भूमि | (२) +६ |
| भूषण | (२) ११ |
| भृगुपति | (१) ५८+ |
| भृगुपतियशोवर्त्म | (१) ५८ |
| भेद्य | (१) +३८ |
| भोग्य | (१) +१ |
| भ्रम्श | (१) +२+ |
| भ्रंशिन् | (१) +३० |
| भ्राता | (१) १०+ (२) ३१ |
| भ्रातृजाया | (१) ८ |
| भ्रुकुटि | (१) +५१+ |
| भ्रूः | (१) १६+, +४८+ (२)+१०+, +३२+, ४१+ |
| भ्रूलताविभ्रम | (१) ४८ |
| भ्रूविकारानभिज्ञ | (१) १६ |
| भ्रूविलास | (२) ४१ |

**म**

| | |
|---|---|
| मघवा | (१) ६ |
| मणिः | (२) ४ १६ |
| मणितटारोहण | (१) ६१ |
| मणिमय | (२) १, +३ |
| मणिमयभूः | (२) १ |
| मण्टप | (२) +१५ |
| मण्डन | (२) +११ |

| | |
|---|---|
| मीन | (२) ३२+ |
| मीनक्षोभ | (२) ३२ |
| मुक्त | (१) ४२+, ४६+, ५५+ |
| मुक्तमार्गः | (१) ४६ |
| मुक्तरोधोनितंब | (१) ४२ |
| मुक्ता | (१) ४७+, ६४+ (२) ९+, ३३+ ४४+, |
| मुक्तागुण | (१) ४७ |
| मुक्ताजाल | (२) ९, ३३ |
| मुक्ताजालग्रथित | (१) ६४ |
| मुक्ताध्वा | (१) ५५ |
| मुक्तास्थूला | (२) ४४ |
| | (१) +२१ |
| मुखं | (१) २५,+२७,+४४, ४९, +६३+ (२) २१, +४५ |
| मुखर | (१) +३८ |
| मुग्ध | (१) १४+ |
| सिद्धाङ्गना | (१) १४ |
| मुच्यमानः | (२) ३३ |
| मुञ्चन् | (१) १२ |
| मुरज | (१) ५७ (२) १ |
| मुष्टि | (२) +४+, +५ |
| मुहूर्त | (१) १९ |
| मूढ | (२) +५ |
| मूर्च्छना | (२) २३ |
| मूर्ति | (१) +४६ |
| मूर्धा | (१) १७ |
| मूल | (२) १६, +२६ |
| मृग | (१) ५३ |
| मृगाक्षी | (२) ३२ |
| मेखला | (१) १२ |
| मेघ | (१) २, ३+, ५ |
| मेघालोक | (१) ३ |
| मेघीकृतात्मा | (१) +४४ |
| मेचक | (१) ६० |
| मैत्री | (१) +३२+ |
| मैथिली | (२) ३७ |
| मोक्ष | (१) ६२ (२) +३६+ |
| मोघ | (१) ६ |
| मौलिः | (१) +५६ |

**य**

| | |
|---|---|
| यक्ष | (१) १ |
| यक्षेश्वर | (१) ५ |
| यत्न | (१) +५५ |
| यद्विमान | (२) ६+ |
| यद्विमानाग्रभूमिः | (२) ६ |
| यन्त्र | (१) ६२+ |
| यन्त्रधारागृहत्व | (१) ६२ |
| यमुना | (१) +५२+ |
| यशस् | (१)+५८+ (२) +८ |
| यष्टिः | (२) +१६ |
| याच्ञा | (१) ६ |
| याचितः | (२) ५२ |

१. रेवतीहस्तदत्त पा०.

| | |
|---|---|
| वश | (१) +६ |
| वंश | (१) ६ (२) +१६+ |
| वसतिः | (१) १, ७, +३८, +४४ (२) +१३ |
| वसन् | (२) १० |
| वसनं | (१) +४२ (२)+२३ |
| वसुधा | (१) +४३+ |
| वस्तु | (२) ५० |
| वाचालः | (२) ३१ |
| वातः | (१) २०+, +३२, ४३, ६३ (२) +४५ |
| वातायनस्थः | (२) +२५ |
| वानीर | (१) +४२+ |
| वान्त | (१) २०+ |
| वान्तवृष्टिः | (१) २० |
| वापी | (२) १३ |
| वामः | (१)९ (२)१५+,३३ |
| वामपादाभिलाषी | (२) १५ |
| वायुः | (९) ५४ |
| वारमुख्या | (२) +८+ |
| वारि | (१) ५४+ |
| वारित | (२) ४+ |
| वारितोष्ण | (२) ४ |
| वारिधारासहस्र | (१) ५४ |
| वाल | (१) +५४+ |
| वालभारः | (१) +५४ |
| वासस् | (१) ६० (२) ११ |
| वास | (२) १६+ |
| वासयष्टिः | (२) १६ |
| वासरः | (२) ४२ |
| वासवी | (१) ४४ |
| वासित | (१) २० |
| विकच | (२) १३+ |
| विकचकमल | (२) १३ |
| विकल्प | (२) ११ |
| विक्लव | (१) ३८ |
| विकार | (१) +१६+ |
| विक्षिपन्ती | (२) २८ |
| विगणयन् | (२) ४७ |
| विगम | (१) +५६ (२)+१६ |
| विगलित | (२) २९+ |
| विगलितशुक् | (२) २९ |
| विजय | (१) +५७ |
| विदित | (१) +६ |
| विदिशा | (१) +२५+ |
| विद्युत् | (१) २८+, +३९+ (२) १८+, ३५+ |
| विद्युद्गर्भ | (२) ३५, ५३ |
| विद्युत्वान् | (२) १ |
| विद्युद्दामस्फुरितचकित | (१) २८ |
| विद्युदुन्मेषदृष्टि | (२) १८ |
| विधि | (१) ६+, ३० (२) ३९ |
| विधिवश | (१) ६ |
| विधुर | (१) +८ (२) ५३ |
| विनयन | (१) +५३ |
| विन्यस्यन्ती | (२) २४ |

| | |
|---|---|
| ध्य | (१) १९+ |
| ध्यपाद | (१) १९ |
| नोद | (२) २४ |
| पत् | (२) +३८ |
| प्रबुद्ध | (२) ४९ |
| प्रयुक्त | (१) +२ |
| प्रयोगः | (१) १० (२)२५, ५३ |
| फल | (२) ५+ |
| फलप्रेरणा | (२) ५ |
| बुधवनिता | (२) ८+ |
| बुधवनितावारमुख्यासहाय | (२) ८ |
| भ्रम | (१) २९, +४८ (२) +१०, ११+ |
| भ्रमादेशदक्षं | (२) ११ |
| भ्रंशिन् | (२) +९ |
| मान | (१) ६४ (२) +६+ |
| मुख | (१) १७, +२८, +५० (२) +३४ |
| युक्त | (२) ३८ |
| योग | (२) +१७ |
| रचित | (१) १९, ६१+ (२) २३+, +४०+ |
| रचितपदं | (२) २३ |
| रचितवपुः | (१) ६१ |
| रह | (१) +१+,८+,३०+ (२) २२+, २४+, +२४, २६+, २९+, +३१, ४८+, ५०, +५१+ |
| विरहगुणितं | (२) ४८ |
| विरहजं | (१) +१२ |
| विरहतनु | (२) २२ |
| विरहदिवस | (२) २९ |
| विरहदिवसस्थापित | (२) २४ |
| विरहमहती | (२) २६ |
| विरहविधुरा | (१) ८ |
| विरहशयन | (२) २६ |
| विरहावस्था | (१) ३० |
| विलसत् | (१) +४८+ |
| विलसन | (१) +३९ |
| विलसित | (२) +१८+ |
| विलास | (२) +३२, +४१ |
| विवृत | (१) ४२+ |
| विवृतजघना | (१) ४२ |
| विशद | (१) +४१, +५२, +५९ (२) +७ |
| विशाला | (१) ३१, +३१ |
| विश्रान्त | (१) २७ |
| विश्राम | (१) २६+ |
| विश्रामहेतुः | (१) २६ |
| विशीर्ण | (१) १९ |
| विशेष | (१) ५८ (२) १ |
| विश्लेषित | (१) +७ |
| विषम | (१) +१९ (२)+२९ |
| विषय | (१)+३५ (२) +१९, +४० |

## श

| पद | स्थान |
|---|---|
| सुकृत | (१) +१७+ |
| सुख | (१)+३६ (२)+३४, ४७ |
| सुखिन् | (१) ३ |
| सुचरित | (१) ३१+ |
| सुचरितफल | (१) ३१ |
| सुप्त | (१) ३९+ |
| सुप्तपारावत | (१) ३९ |
| सुप्ता | (२) २७ |
| सुभग | (१) ९, ११+, +२५, +२९, ३०, +४१, +४३ (२) +१८ |
| सुभगम्मन्यभावः | (२) ३१ |
| सुर | (१) ५२+ |
| सुरगज | (१) ५२ |
| सुरत | (१) ३२+ (२) ७+ |
| सुरतग्लानि | (१) ३२ |
| सुरतजनित | (२) ७ |
| सुरपति | (२) १२+ |
| सुरपतिधनुश्चारु | (२) १२ |
| सुरभि | (१) +१६, +२१, +२३, +३३, ४६+ (२) +४२ |
| सुरभित | (१) ५३+ |
| सुरभितनयालम्भज | (१) ४६ |
| सुरभितशिल | (१) ५३ |
| सुरयुवति | (१) ६२ |
| सुलभ | (२) ३८+ |
| सुलभविपत् | (२) ३८ |
| सुहृत् | (१) ३९ (२) १६, ३७+ |
| सुहृदुपनतः | (२) ३७ |
| सूचि | (१) २४+, ३८+ |
| सूचिभिन्न | (१) २४ |
| सूचिभेद्य | (१) ३८ |
| सूत्र | (२) +९ |
| सूर्य | (१) ३९ (२) १७+, +४३+ |
| सूर्यापाय | (२) १७ |
| सृष्टि | (२) १९ |
| सेन्द्रचाप | (२) १ |
| सेव्यमान | (२) ४ |
| सोत्कंप | (१) २२ |
| सोपान | (२) +१३+ |
| सोपानत्वं | (१) ६१ |
| सौदामिनी | (१) ३८ |
| सौध | (१)२८+ (२) २५+ |
| सौधवातायनस्थः | (२) २५ |
| सौधोत्सङ्गप्रणयविमुख | (१) २८ |
| सौभाग्यं | (१) ३० |
| सौम्य | (१) ५० (२) २३, ३६, ५२ |
| सौहार्द | (२) ५३ |
| स्कन्दः | (१) ४४ |
| स्कन्धः | (१) +५४+ |
| स्खलित | (१) २९+ |

## सर्वनामशब्दाः

### तत्र युष्मच्छब्दः



### अस्मच्छब्दः

तस्मिन् (१) २, १९, ४०, ५५, ६१, (२) ४३
सा (१) ३०, (२) २२, ३०, ३४, ३७
तां (१) १०, ३९, ४८, (२) २२, २५, २६, २८, ३१, ३५, ३८
ताः (१) ३८, ६२
ताभ्यः (१) ६२
तस्याः (१) २०, ४२, ४७, ५२, ५३ (२) १४, २१
तासां (१) ५०
तत् (१) ७, ११, २५, ४४, ४७, ४९
तस्मिन् (२) ३४

किंशब्दः

कः (१) १, ८, ४२
के (१) ५५
कस्य (२) ४७
कां (२) ४९
कस्यां (१) ३९
किं (१) ३, १७

एकशब्दरूपाणि

एकः (१) १०+ १७, (२) २९+
एकं (१) ३१, ४७
एकस्मिन् (२) ४१

अन्यशब्दः

अन्यः (१) ८, (२) १५
अन्यस्मिन् (१) ३५

## आख्यातरूपाणि

अर्हति (१) ४४, ५७, (२) २०
अस्ति (२) ४३
असि (१) ७, ५३
स्यात् (१) ८, ४३, ५५, ६०, ६५, (२) ३६, ४८
स्युः (१) ५९
स्याः (१) २८, ६२
अध्यास्यन्ति (१) १५
अध्यास्ते (२) १८
आस्ते (२) २१
अत्येति (१) ३८
एष्यति (२) ३४
परीयाः (१) ५९
इच्छामि (२) ४५

| | | | |
|---|---|---|---|
| पास्यसि | (१) १५ | | (१) ५५ |
| ब्रूयाः | (२) ३८ | व्यालंबेथाः | (१) ४६ |
| आह | (२) ४०, ४९ | अवलंबे | (२) ४७ |
| आहुः | (२) ५० | लप्स्यते | (१) ३५, ४१ |
| भजेथाः | (१) ४९ | लब्धा | (१) २५ |
| बाधेत | (१) ५४ | आलिङ्ग्यन्ते | (२) ४५ |
| भाययेः | (१) ६२ | आलिप्यते | (२) ४३ |
| बिभर्ति | (२) २१ | व्यालुंपन्ति | (२) ७ |
| भवति | (१) ३, ११, १२, १५, १७, २० (२) ५, ३० | वद | (२) ४२ |
| | | अधिवसेः | (१) २६ |
| | | वक्ष्यसि | (१) १७, ५३ |
| भव | (१) २९ | वहति | (१) ६४ (२) १० |
| भवेत् | (२) ४५ | वाहयेत् | (१) ३९ |
| अभूत् | (२) ४०, ५२ | वास्यति | (१) ४३ |
| माभूत् | (२) ३४ | विद्धि | (२) ३६ |
| अभूः | (१) २८, ३८, ५० | विशति | (२) ३९ |
| मास्मभूः | (१) २८ | निर्विशन्ति | (२) ८ |
| मन्ये | (२) २० | निर्वेक्ष्यावः | (२) ४८ |
| मन्दायन्ते | (१) ३९ | निर्विशेः | (१) ६३ |
| मानयिष्यन्ति | (१) २२ | अभ्यवर्षत् | (१) ४९ |
| आमोक्ष्यन्ते | (१) ३६ | व्रज | (१) १६, २७, ४८ |
| मोचयिष्यन्ति | (२) ३० | व्रजेयुः | (२) ४२ |
| यास्यति | (१) १८ (२) ३३ | | (२) २५, ३२ |
| यायाः | (१) ३४ | शक्ष्यति | (१) २० |
| ययाचे | (१) ५ | शब्दायन्ते | (१) ५७ |
| रमसे | (१) २८ | शृणु | (१) १३ |
| रुणद्धि | (१) १० | श्रोष्यसि | (१) १३ (२) ३७, |
| लक्षयेथाः | (२) १७ | सहते | (२) ४३ |

## अव्ययानि, निपाताश्च

### क्त्वा



### ल्यप्

उत्थाप्य (२) ३५
उपभुज्य (१) १३
एत्य (१) १२ (२) ३
न्यस्य (१) १३
निक्षिप्य (२) २३
प्राप्य (१) ३१, ३६, ५३
(२) ५
प्रेक्ष्य (२) १३, १४
वितत्य (१) ५९
विहस्य (१) ५१
वीक्ष्य (२) ३७
सन्निपत्य (१) २९
संभाव्य (२) ३७
स्वागतीकृत्य (१) २३

## तुमुन्

आदातुं (१) ४७
उपकर्तुं (२) ३८
कथयितुं (२) ४०
कर्तुं (१) ११ (२) १८, ४३
गन्तुं (१) २३
तुलयितुं (१) २० (२) १
पातुं (१) ५२
मोघीकर्तुं (१) ४१
वक्तुं (२) ३५
विहातुं (१) ४२
शमयितुं (१) ५४
सुखयितुं (२) २५
हर्तुं (१) ४०

## निपाताः

अन्तर् (१) ३+ २०+ ५०, +६१+(२)१+१८+
असकृत् (२) ३०, २९, ४९
आशु (१) २३, ४०, ५०
उच्चैः (१) १७, ३७, ६४+
उपरि (२) ३२+ ४७
एव (१) १६, ३०, ५३ (२) १०, १४, २६, २७, ३७, ३८, ४७, ५२
एवं (२) ३८, ५१, ५३
पे (१) ३, ८, १७, २३, २८, ३५, ३९, ४०, ४२ (२) ५, १३, २३, २८, ३०, ३२, ४०, ४१, ४२, ४३, ४६, ४७, ४९, ५१, ५२, ५३
इति (१) ५, १४, ३४ (२) १४, २२, २८, ३२, ३७, ४५, ४९, ५३
इव (१) १५, १८, १९, २५, २६, ३१, ३२, ४१, ४२, ४७, ४९, ५१, ५२, ५७, ५८, ५९, ६०, ६४ (२) ६, १९, २०, २६, २७, ३७, ४६

SREEVATHSA PRESS, 113, BIG STREET, TRIPLICANE, MADRAS.

# कुन्तलेश्वरदौत्यम्

गव्यादौ—

इह निवसति मेरुश्शेखरो भूधराणा
मिह हि निहितभारास्सागरास्सप्त चैव ।
इदमहिपतिभोगस्तम्भविभ्राजमानं
धरणितलमिहैव स्थानमस्मद्विधानाम् ॥

काव्यान्ते—

असकलहसितत्वात् क्षालितानीव कान्त्या
मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि ।
पिबति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः ॥

असकलहसितत्वात् क्षालितानीव कान्त्या
मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि ।
पिबतु मधुसुगन्धीन्याननानि प्रियाणां
मयि विनिहितभारः कुन्तलानामधीशः ॥

| | | | |
|---|---|---|---|
| अधीशः | २, ३ | आनन | २, ३ |
| असकल | २+, ३+ | उत्पल | +२, +३ |
| असकलहसितत्व | २, ३ | कर्ण | +२+, +३+ |
| अस्मद्विध | १ | कर्णोत्पल | +२, +३ |
| अहिपति | १+ | कान्ति | २, ३ |
| अहिपतिभोगस्तम्भ- | | क्षालित | २, ३ |
| विभ्राजमान | १ | कुन्तल | २, ३ |

## कुन्तलेश्वरदौत्यपदावलिः ।

| | |
|---|---|
| तलं | +१ |
| धरणि | १+ |
| धरणितल | १ |
| नयनत्वं | +२, +३ |
| निहित | १+ |
| प्रिया | २, ३ |
| भार | +१, +२, +३ |
| भूधर | १ |
| भोग | +१+ |
| मधु | २+, ३+ |
| मधुसुगन्धि | २, ३ |
| मुकुलित | २+, ३+ |
| मुकुलितनयनत्व | २, ३ |
| मेरुः | १ |
| व्यक्त | २+, ३+ |
| व्यक्तकर्णोत्पल | २, ३ |
| विनिहित | २+, ३+ |
| विनिहितभार | २, ३ |
| विभ्राजमान | +१ |
| शेखर | १ |
| सप्त | १ |
| स्तम्भ | +१+ |
| सागर | १ |
| स्थान | १ |
| सुगन्धि | +२, +३ |
| हसितत्व | +२, +३ |
| इदं | १ |
| त्वयि | २ |
| मयि | ३ |
| निवसति | १ |
| पिबति | २ |
| पिबतु | ३ |
| च | १ |
| इव | २, ३ |
| इह | १ |
| एव | १ |
| हि | १ |

अथ

# मेघसन्देशः

## पूर्वमेघः ।

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोः
अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥

धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

जातं वंशे भुवनविदिते पुष्कलावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

सन्तप्तानां त्वमसि शरणं तत्पयोद प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।
कः संनद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥

तां चावश्यं दिवसगणनातत्परामेकपत्नीम्
अव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।

कालेकाले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥ १३ ॥

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ १४ ॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-
द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥

त्वय्यायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।
सद्यस्सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किंचित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै-
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ १८ ॥

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तस्सारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २० ॥

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।
जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २१ ॥

अम्भोबिन्दुग्रहणचतुरांश्चातकान्वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कण्ठानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥ २२ ॥

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥ २३ ॥

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २४ ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा ।

नीचैरास्तनितसुभगं पास्यसि स्वादु यस्मा-
त्सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २५ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २६ ॥

विश्रान्तः सन्व्रज वननदीतिरजातानि सिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २७ ॥

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैर्यत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितस्स्याः ॥ २८ ॥

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २९ ॥

वेणीभूतप्रतनुसलिला सात्वतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थाया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३० ॥

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धा-
न्पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ ३१ ॥

दीर्घीकुर्वन्पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ३२ ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्तोपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा
लक्ष्मीं पश्यन् ललितवनितापादरागाङ्कितेषु ॥ ३३ ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतीस्नानतिक्तैर्मरुद्भिः ॥ ३४ ॥

अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन्सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३५ ॥

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥ ३६ ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३७ ॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।

सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वी
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ ३८ ॥

तां कस्यां चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३९ ॥

तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४० ॥

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४१ ॥

तस्याः किञ्चित्करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥ ४२ ॥

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यैः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४३ ॥

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ ४४ ॥

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४५ ॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ४६ ॥

वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४७ ॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणाम्
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ४८ ॥

ब्रह्मावर्तं जनपदमधः च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४९ ॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५० ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।

गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५१ ॥

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५२ ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५३ ॥

तं चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५४ ॥

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५५ ॥

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५६ ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ।
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५७ ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥ ५८ ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५९ ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरदरदनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६० ॥

हित्वा तस्मिन्भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६१ ॥

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।
ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्या-
त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः ॥ ६२ ॥

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ६३ ॥

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ६४ ॥

श्रीः

# उत्तरमेघः ।

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ३ ॥

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ४ ॥

नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ५ ॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा जालमार्गै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ६ ॥

यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानां-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ७ ॥

अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किंनरैर्यत्र सार्धम् ।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥ ८ ॥

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ९ ॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ १० ॥

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ ११ ॥

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।

यस्योपान्ते कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ १२ ॥

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संनिकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ १३ ॥

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततटितं त्वां तमेव स्मरामि ॥ १४ ॥

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ १५ ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ १६ ॥

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ १७ ॥

गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ १८ ॥

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्रास्ते युवतिविषये सृष्टिराद्येव धातुः ॥ १९ ॥

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥ २० ॥

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः
निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेबिभर्ति ॥ २१ ॥

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां शारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥ २२ ॥

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चि-
द्भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥ २३ ॥

शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः ।
मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ २४ ॥

सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।

मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥ २५ ॥

आधिक्षामां विरहशयने संनिषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।
नीता रात्रिः क्षण इव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २६ ॥

पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टा-
न्पूर्वप्रीत्या गतमभिमुखं संनिवृत्तं तथैव ।
चक्षुः खेदात्सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥ २७ ॥

निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बम् ।
मत्संभोगः कथमुपनयेत्स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥ २८ ॥

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।
स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ २९ ॥

सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३० ॥

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्थंभूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगंमन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥ ३१ ॥

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ ३२ ॥

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
र्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ।
संभोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥ ३३ ॥

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचित्
सद्यःकण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ ३४ ॥

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ ३५ ॥

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३६ ॥

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैव ।
श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपनतः सङ्गमात्किञ्चिदूनः ॥ ३७ ॥

तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुं
ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः ।

दीर्घीकुर्वन्पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ३२ ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्तोपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा
लक्ष्मीं पश्यन् ललितवनितापादरागाङ्कितेषु ॥ ३३ ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतीस्नानतिक्तैर्मरुद्भिः ॥ ३४ ॥

अप्यन्यस्मिञ्जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन्सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३५ ॥

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतै
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥ ३६ ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३७ ॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
　लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
　मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ४४ ॥

भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां
　ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
　पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४५ ॥

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
　सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
　गाढोष्णाभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ४६ ॥

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
　तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
　नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४७ ॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
　शेषान्मासान्गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
　निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४८ ॥

भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे
　निद्रां गत्वा किमपि रुदती सस्वनं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत्पृच्छतश्च त्वया मे
　दृष्टः स्वप्ने कितव रमयन्कामपि त्वं मयेति ॥ ४९ ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ५० ॥

आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ ५१ ॥

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ५२ ॥

एतत्कृत्वा प्रियमनुचितप्रार्थनादात्मनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुध्या ।
इष्टान्देशाञ्जलद विचर प्रावृषा संभृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ५३ ॥

श्रीयदुगिरि यतिराज संपत्कुमार रामानुज मुनिभिः प्रत्यवेक्षिता मुद्रिताश्च

विक्रयाय सिद्धा ग्रन्थाः

(नागरलिपिः)

| | | | | | |
|---|---|---|---|---|---|
| १. | शृङ्गारप्रकाशः ३६ प्रकाशात्मकः—श्रीभोजदेवकृतः तत्र (२२-२३-२४.) प्रकाशाः (१९२५) | .... | ३ | ० | ० |
| १. | तापसवत्सराजनाटकम्, अनङ्गहर्षमातृराजकृतम् (१९२७) | .... | २ | ० | ० |
| ३. | काश्यपसंहिता, सर्वविषचिकित्साप्रतिपादिका (१९३३) | .... | ३ | ० | ० |
| ४. | श्रीपौष्करसंहिता, श्रीपाञ्चरात्रागमग्रन्थः (१९३४) | .... | ५ | ० | ० |
| ५. | सद्विद्याविजयः (१९३६) | .... | १ | ८ | ० |
| ६. | मेघसन्देशकाव्यपदावलिः कुन्तलेश्वरपदावलिश्च | ... | | | |

(आन्ध्रलिपिः)

श्रीपाञ्चरात्रागमे—

| | | | | | |
|---|---|---|---|---|---|
| १. | पाद्मसंहितायाम् पूर्वभागः | .... | ४ | ० | ० |
| २. | ,, उत्तरभागः | | | ० | ० |
| ३. | अष्टश्लोकी—श्रीपराशरभट्टारककृता सव्याख्या | ... | ० | ४ | |

(सर्वत्र प्रापणभृतिः पृथक्)

(मुद्र्यमाणग्रन्थाः)

१. विजयमङ्गल दीपिका ....

२. वेदान्तकौस्तुभः ...

आसूरि श्रीनिवासय्यङ्गार्यः,

श्रीयतिराजमठः

मेलुकोटा, मैसूर्

श्रीः

महाकवेः कालिदासस्य कृतिषु प्रथमो भागः काव्यानां पदावलिः ।



प्रकाशकः

आसूरि श्रीनिवासय्यंगार्यः,

श्रीयतिराजमठः

मेलुकोटा, मैसूर्